विहीतं विवेकविरसं सौभाग्यातिशयं पश्यन्तो महामोहहृतहृदयाभ्रमादिति मन्यामहे वृत्तेनजनताचरिताचार एव सर्वविधप्रेयश्श्रेयो निमित्तम्। एषामेव सर्वोपि व्यवहारः पाण्डित्यपूर्णः। कार्यसिद्धिरेव साधिका साधननिर्दोषत्वस्य। कार्यसिद्धिश्च सन्निहिता सती तिष्ठति वृत्तेननीतिनैपुण्यस्येत्यादि। किमस्ति कोऽप्युपायो येनेमे तन्नदीर्घायुष एतादृशास्तरुणा दूरदर्शिनो भवेयुः? (४)

चालितचातुर्यचाकचिक्य विचलितचक्षुष्कतया परिहृतस्वसंस्कृतिका वैदिक-संप्रदायरक्षाछद्मना संगृहीत धनेन स्थापित महाविद्यालये तत्संप्रदायप्रतिकूलं विहितं नियमं स्वचातुर्यं मन्यमाना आतुरपरिचर्या हिंसा तद्वधोऽहिंसा धर्मशास्त्रानुकूलधर्मो-पदेशोऽसत्यं तद्विपरीततदुपदेशः सत्यमितिपश्यन्तश्चरमेऽपि वयसि वर्त्तमानाः कति-चिद् भारतवासिन इति नोत्पश्यन्ति यदि दैवदुर्विपाकस्य नियततया भारताद्दुष्टेन-सभ्यतोत्थानादुत्तरं विध्वस्ताः श्रुतिस्मृतीतिहासपुराणेषु ये स्वसंस्कृतिसेविन स्थास्यन्ति वर्णाश्रमिनो भ्रातरो भारतवासिनः। तेऽस्मान् अस्मदीयान् वा क्रान्तर्भावयिष्यन्ति खिस्तेषूत वैदिकेषु। वयं च तदा त्रिशङ्कु सहोदरास्तेषां किं के भविष्यामः सुहृदउत दुर्हृदः। अस्माकं पक्षपातस्तदा गृहीतसभ्यताबन्धुषु भविष्यति यद्वा त्यक्तसभ्यतासमर्थकेषु। द्विकण्टकविद्धमिदं भारतवर्षं तदा कण्टकत्रयविद्धं कां दशामनुभविष्यति। किमस्ति कोप्युपायो येनैतेषामासन्नायुषां परिणामदर्शिता सहधर्मिणी भवेत्? (५)

दुर्दैवोदयाद् दूरीभूतं निजराज्यं सुदैवोदयात्पुनरपि सन्निहितं भवति प्रमादा-त्परित्यक्तस्तु वर्णधर्म उपायसहस्रेणापि समासतया तदधिकारस्य न पुनरिहजन्मनि सुलभो भवतीति तत्कृते तुच्छजीवितस्यापि व्ययाशंकाया न भेतव्यम्। इतरत्रिवर्गस्य धर्मोपजीव्यतया तत्स्वरूपस्य च विधिवाक्यमात्रवेद्यतया विहितपथात्पदमपि नापसर्त्त-व्यम्। आपत्तिसहस्रापातेऽपि न पतितसम्मतपथे स्थातव्यम्। अस्मान्नेव विप्रादीन् पथिकान् पतितपथस्यानुकुर्वन्ति शूद्रा अन्त्यजाश्चास्मत्सहचरा इति तेषां धर्मपरिवर्त्तने ऽपि वयमेव त्यक्तात्मसंस्कृतयो हेतवः। अतश्चापि स्वधर्मधिकारतो विधर्मस्वीकारतश्च त्रसितव्यम्–इति पठिता अपि केचन न जानन्ति, तेषां बोधोदयाय किं कोऽप्यस्ति यत्नः? (६)

ये च वीरम्मन्यविदेशीयशासकहितावहा भाषाभूषादिपरिकरा न ते सर्वे परा-जितप्रजाहितावहाः। यथा सततध्यानविषयीभूतो रूपादिविषयो ध्यातुरासक्ति स्वस्मि-न्नाकर्षति तथैव धृतो भाषाभूषादिपरिकरो धर्त्तुस्स्वान्तमात्मसाद्भावयति। ततश्चाचारः शनैश्शनैरवसीदन् परपरिकरहृतहृदयं त्यजति। ततश्चाचारानुचरो धर्मस्तं विजहाति। ततश्च धर्मविहीनं तमधर्मोऽभि भवति। ततश्च कामादिदासो भूत्वा विधवाकुलटा श्वप्रावेदी द्विजवरद्वेषी च भूत्वानिष्कृतिमत्त्वाभावान्महाचाण्डालो भवन् जातिचाण्डलान् विचालयति स्वधर्मत इति पश्यतामपि परकीय भूषामापादितः स्वशुभमाशासानानां प्रज्ञापरिवर्त्तनाय किं कोप्यस्त्युपायः? (७)

अनेन परिश्रमं शास्त्राणि संप्रदायतोऽधीतानि शास्त्ररहस्यं गूढमपि जानात्ययम् वचनानां तात्पर्यविरोधाभासेतेषां समन्वये प्रसरत्यस्य प्रज्ञेति जानन्तोऽपि केचनोन्मत्ताः

समुपस्थिते कर्त्तव्यनिर्णये निर्णायकत्वेनैनं न प्रमाणयन्ति यश्च श्रेण्यां श्रेण्यां वर्षाण्यधीत्य कथंचित्प्राड्विवाको भूत्वापि धर्माधिकरणे मन्दतया प्रसिद्धिमनाराध्य कथंचिद्दिनानि दीन इवातिवाहयति तं प्रलापिनं तथावसरे प्रमाणयन्ति तथा स्वतन्त्रैरस्मैर्भाव्यमित्युद्घोषयन्तोऽपि विधर्मिराजशासनान्युद्धाव्य धर्मात्मनो धैर्यं सिद्धान्तं पीडयन्ति तथैवात्मानं मूर्खसंतानं ख्यापयन्तोऽपि न जिह्रियति, तेषां दुराग्रहापनुत्तये किं कोऽप्यस्त्युपायः? (८)

निर्दिष्टा चेयं कथा प्रतारकशिक्षादीक्षितशिक्षितानाम्। ये च गुरवः साधवश्च कथ्यन्ते। येषां संख्या षष्टिसप्ततिलक्षमिता। येषां भोजनव्यसनव्ययोऽतिरिच्यते इहदेशे लाङ्गलिनामियती वर्त्तते संख्या कोटिद्वयमितलाङ्गलग्राहिनिर्वाहव्ययतः। येषु च बहवोऽनियतवनितापरिग्रहतो निरवसितशूद्रादप्यपकृष्टान् पुत्रान् उत्पादयित्वा तांश्चापि गुरुपदे स्थापयित्वा तदुच्छिष्ट तत्स्पृष्ट प्रसादादिनावर्णाश्रमिणो गृहस्थान् पातयन्ति। केचन तेषु प्रत्यक्षतः स्त्रीपरिग्रहरहिता अपि प्रच्छन्नपापतः संतानान्युत्पाद्य तानि च कस्मैचित् संबन्धिने निर्धनाय धनेन सह वितरन्ति। लुब्धतत्संबन्धिद्वारा तान्यपरिचितजनतायां तत्पुत्रत्वेन प्रख्यापयन्ति। तेषां च कुलीनकन्ययोपयमनं विधाय कुलीनान् गृहमेधिन आकुलयन्ति। ये च केचन सन्ति भवादृशा विद्वांस आचारवन्तश्चाचार्यास्तेऽनर्थमेनं पश्यन्तोऽपि न तत्प्रतीकाराय किमपि योजयन्त्यौषधं यशस्यम्। प्रत्युतैतादृशेभ्योनूलान्यावसायिभ्य आददते दक्षिणाम्। पूर्वजैर्दत्तं दीयमानं चावरजैर्धनं न धर्मे न लोकहिते विनियुज्यते कल्पते धर्मध्वजिभोगे व्ययमानं लघ्नवीनानां कोपाय। शास्त्रिभिरस्यानर्थस्य प्रशमाय कथं न क्रियते कोऽप्युपायः? (९)

वर्णधर्मप्रतिपालनं यथाधिकारं सर्वसाधारणकर्तव्यम्। अधिकारविनिमयेन कृतं कर्म न केवलं निष्फलं, किन्तु प्रत्यवायजनकम्। अहिंसा सत्यादीनां साधारणधर्माणां प्रतिपालनमपि नियतकर्तव्यम्। एतेषां पालनेनैव पात्रता समुपादीयते कर्त्रा। अन्यथा हस्तिस्नानमिव कृतमन्यत्कर्मापि निष्फलम्। साधारणधर्मानुसरणपुरस्सरं कामनया विधीयमानो विशेषो वर्णधर्मः कल्पतेऽभ्युदयसिद्धये। सकामोऽपि विहितो विशेषो वर्णधर्मस्तृप्तिमभ्युदयतोऽनुभावयन् श्रेयसि प्रलोभयन् कर्तारं निष्कामं भावयति। पुष्पाभिलाषया विहितो यत्नोऽपि तत्प्राप्तौ फले प्रलोभयति, पुष्पतश्चोदासयति यतमानम्। निष्कामेन कामक्रोधादिशत्रुपर्कविजेत्रा कर्त्रा विधिपराधीनेन कर्तव्यधिया विहितोऽयमेवधर्मोऽन्तःकरणशुद्धयेकल्पते। शुद्धे च तस्मिन् शान्ततादान्ततोपरतातितिक्षुतादयो गूढा आत्मगुणाः प्रादुर्भूयात्मज्ञानेन प्रादुर्भावितेन कर्त्रा सञ्चितानि यावन्तिकर्माणि निर्धूय सर्वस्मिञ्जगति ब्रह्मरूपतां दर्शयन्ति। समुच्चयवादिनामाचार्याणां मते त्वादेहविलयं कर्मणामाश्रयणमिति विशेषः। अविच्छिन्नतैलधारावद् भगवद्रूपानुसंधानरूपायां निदिध्यासनस्थानीयायां भक्तावपि नास्ति मतभेदस्यकारणमित्यादि यदुपदिष्टं भवद्भिस्तत्र कस्य स्याद् पापिनो विद्वेषः शास्त्रिपादाः? भवतां व्याख्याने विद्यतेऽस्माकं श्रद्धा शास्त्रसिद्धमेव सर्वं भवद्वक्तव्यम्। शास्त्रैकवेद्यफलसम्बंधस्य परोक्षफलकस्य कर्तव्यस्योपदेशे भवादृशाः शास्त्रिण एव प्रभवन्ति। परंतु, भगवन्? अयं शास्त्रीयो विधिः कस्मिश्चिदपि निकेतने

धर्माणां नोपदिश्यते। पण्यस्थानीये तत्र तत्र धर्मस्थाने तु क्वापि विचित्रैव लीलाऽवलोक्यतेऽदने दर्शने च दन्तिनो दन्ताविव भिन्नावन्तर्गोष्ठि बहिर्गोष्ठि च दृश्येते तदुपदेशौ। दृष्टदेशदेशान्तराणां नरमणीनामश्रद्धोत्पादकानामीदृशानां मतभेदविवर्धकानां कल्याणप्रतिबन्धकानामनुदिनमेधमानानां बहुधाऽनधीत धूर्तप्राय मधुरभाषिजन सुलभसाधनानामपत्ययपटूनामपथ्यव्यवहाराणां प्रवाहस्यावरोधकः कोऽपि मध्यम उपाय आविष्कार्यो भवता। अन्यथा सर्वोऽप्युपदेशोऽसफलः स्यात् पूज्यपादानाम्।

इत्यादि प्रभूततरप्रश्नश्रवणानन्तरं शास्त्रिपादैरुक्तम्,-"श्रीमतां बुद्धिमत्तया मध्यस्थतया च प्रसीदति मे चेतः। कुशिक्षया भ्रान्तानामिव प्रमादतो धर्म धनार्जन साधनं मन्यमानानामपि भारतसन्तानानां हतभाग्यानां दोषा भवद्भिः प्रश्नमिषेणोद्घाटिताः' इति। भवन्तो जानन्ति प्रश्नानामेतादृशानामुत्तरेण न जायते किमपि फलमृते विरोधप्रसरात्। भवद्भिर्नदत्त- कोऽपि शास्त्रविरोधो नवा प्रदर्शितोऽसंभवः शास्त्रीयविधेरनुष्ठाने यदुत्तराय यतेमहि। तथाकृताश्च पुरुषदोषा दर्शिता च तादृशपुरुषाणामतिसंभावना संख्या! एषांच वस्तुत. स्वीकार एव उत्तरम्। निर्दिष्टानां दोषाणां प्रहाणायोपाय पृष्टस्तद्विषये किञ्चिद्वक्तव्यमस्ति।

इति तुभवतां विदितं स्याद्, यत्र कोऽपि पामरोऽपि दुःखाय यतते। कथं च तथा कुर्यात्सचेता:? कुत्रचिद् दुःखेऽपि विषसेवनादौ प्रवृत्तिर्दृश्यमाना सुखोद्देशेनैवाव गन्तव्या! दुर्जीवनापेक्षया मरणमेव वरं मन्यमानेनाद्रियते तदनुकूलो यत्नः। भवतां प्रश्नेषु निर्दिष्टा दोषवन्तोऽपि पुरुषाः सुखाय यतमानमेवाऽऽत्मानं मन्यन्ते! तेषां तादृशे तादृशे विषय एवोदीयमाना वर्तते कृतिसाध्यतासहचरितेष्टसाधनता! दुर्वासना प्रतारिता तेषां धीस्तत्र न पश्यति बलवदनिष्टानुबन्धं विरोधिनमिष्टसाधनतायाः।

यस्माच्चेयं दुर्वासना समुद्भूता, गताचास्तं सद्भावना सहेतुरेव तावदन्वेष्टव्यो मिलितैरस्माभिः। मिलितानामेवैतद्विधेयं न पुनरेकस्य!।

भारतीयजनतासौभाग्यसूर्यस्य चिरादनुदयान्निशीथे परिसर्पन्ती न शक्नोति स्वस्य श्रेयोमार्गं द्रष्टुम्। सर्वमरयाः कर्तव्यं वारुणीमत्तवैदेशिकवानरयूनामनुकरणम्। सर्वेषां श्रीमतां प्रश्नानां तावदेतदुत्तरम्-यत्प्रचलित शिक्षायाः परिवर्तनं त्वरया क्रियताम्। एकः संस्कृत महाविद्यालयः काशीक्षेत्रे, तदङ्गभूताश्चान्ये विद्यालयाः कलिकाता मोहमयी-मद्रासादिषु महानगरेषु क्रियन्ताम्।

सर्वविद्योपदेशः स्वभाषया विधीयमानो व्यापको भवति। जापानादि देशेन तथाकृतं क्रियते च। पुरुषदोषमुद्दिश्य भवद्भिर्यदुक्तम् अस्माभिरपि भवतां सन्तोषाय तद्विषये किञ्चिदुच्यते। न्यायवेदान्तादिसिद्धान्ते मतभेदो वर्त्तते परन्तु न भवति सविरोधहेतुः। नैयायिक एवात्मानं नैयायिकं कथयति। नैयायिकसंप्रदायरक्षककुलविशेषाभावादनैयायिकस्तु नात्मानं नैयायिकं मन्यते। बौद्धजैनशैववैष्णवादिसिद्धान्तसंरक्षककुलानां कल्पितत्वादज्ञातबौद्धसिद्धान्तोऽप्यात्मानं बौद्धं मन्यते। एवंजैनादयोऽपि शून्यवाद, क्षणिकवाद, क्षणिकविज्ञानवाद, क्षणिकविज्ञानानुमेयबाह्यवाद, स्याद्वाद, प्रलया-

स्पर्शिजगदनादिवाद, प्रलयस्पर्शिजगदनादिवाद, सेश्वरवाद, निरीश्वरवाद, कर्तृवादाकर्तृवाद, द्वैतवाद, द्वैताद्वैतवाद, विशिष्टाद्वैतवाद, शुद्धाद्वैतवादाद्वैतवाद, परमाणुवाद, प्रधानवाद, मायावाद, पञ्चीकरणवाद, त्रिवृत्करणवादानां, संसर्गतावाद, प्रकारतावाद, पीलुपाकवाद, पीठरपाकवाद, बिम्बवाद, प्रतिबिम्बवाद, जातिशक्तिवाद व्यक्तिशक्तिवाद, विशिष्टशक्तिवाद,नञर्थानुयोगिता संबन्धवाद, नञर्थप्रतियोगितासंबन्धवादादीनामिवकुलं न मञ्चवति तथापि चतत्तद्वादाभिमानिपूर्वज पूज्यपुरुषानुमतं कल्पितं तदपरपुरुषैः। अयमपि व्यवहारो वैदिकशाखाव्यवहारस्य तदीयेष्टापूर्त्तदत्ताप्ररोहस्य जन्मसिद्धवर्णाधिकारस्य च विघातकः। पूज्यपूजाव्यतिक्रमस्य च हेतुः। सर्वस्यैतादृशस्यानर्थस्योपशमः स्वभाषा स्वसंस्कृतिप्रचारसाध्य एव। संस्कृतिसाम्यादेवानीश्वरवादिनामीश्वरवादिनां वैदिकावैदिकानां च प्रचलति परस्परं व्यवहारः। ईश्वरवादिनामपि आर्याणां यवनानां संस्कृति भेदादेव वर्तमानो भवति कलहः तरुणानां संस्कृतिभिद्यते तद्रिरक्षायै च त्वरया विधीयतां देशभाषायाः प्रतरः प्रचारः। तरुणानामिव जरठानामपि श्रुतिस्मृतिमीमांसार्थशास्त्राध्ययन दूराणां संस्कृतिरपि चिन्तनीया संवृत्तेति तत्स्थानापन्नताकृतेऽप्यपेक्षितोयत्नः। स च संस्कृत महाविद्यालयानां त्वरया स्थापनमेव।

अनेन शास्त्रिपादानां तर्कभूषणानाञ्च सौम्येनोत्तरेण सन्तुष्टया मोहमयीजनतया विद्वत्समाजाकारणमिश्रैः श्रीवल्लभकुलकमलदिवाकरैः श्री १०८ गोकुलनाथमहाराजैः श्री यदुनन्दन झा थाके महादेवशास्त्रि-पणसीकर वासुदेवशास्त्रि गोडसे नरहरशास्त्रि-श्रीबलभद्रशर्म देवर्षि श्री रमानाथशास्त्रि- श्री हरगोविन्दशास्त्रिप्रभृतिमोहमयीपण्डितैः साधुसत्कृताः श्री शास्त्रिपादा इतः कलकत्तामगच्छन्नागच्छंश्च समये समये समुपस्थिते धार्मिकप्रसंगे मोहमयीम्

काशिस्थसाङ्गवेदविद्यालयस्थापनं वेदपरीक्षोत्तीर्ण विदुषां वृत्तिप्रबन्ध अदृष्ट-श्रुतश्रुतोपमानब्राह्मणमहासम्मेलनसमायोजनं पण्डितपत्रप्रकाशनं शारदाविधानसमर्थक समाजो महामहोपाध्यायपदव्यास्तदीयविद्यालयस्य च त्यागः संस्कृतब्राह्मणमहासम्मेलन-संस्कृतमासिकपत्रिकायाः प्रकाशनं सनातनधर्मप्रदीपस्यनिर्मापणं वर्णाश्रमस्वराजसंघस्य प्रादुर्भावनम्। जीविकाविहीनविदुषां वार्षिकशतमुद्राप्रदानप्रबन्ध इत्येवमादयः शतशः कीर्तिस्तम्भाः शास्त्रिपादानां संप्रत्यपि विराजन्ते। इति शुभम्।



# वर्णाश्रम धर्म संरक्षणावश्यकत्वम्

श्री· शास्त्रिअमृतलालशर्मा
वेदान्तव्याकरणतीर्थ

कलाभ्यां चूडालंकृतशशिकलाभ्यां निजतपः-
फलाभ्यां भक्तेषु प्रकटितफलाभ्यां भवतु मे।
शिवाभ्यामस्तोकत्रिभुवनशिवाभ्यां हृदि पुन-
र्भवाभ्यामानन्दस्फुरदनुभवाभ्यां नतिरियम् ॥१॥

धर्मप्राणदयानिधानपरमात्मज्ञानदश्रीगुरोः
पादाम्भोजरजो रजोभवभवार्त्तिच्छेदि नत्वाऽनघम्।
धर्मध्वंसमवेक्ष्य रक्षणकृते प्राणानपेक्ष्यं श्रमं
स्मृत्वा सद्व्रत सद्गुरोरभिमता वाक्पुष्पमालार्प्यते॥२॥

वर्णाश्रमधर्म इति पदे विशेष्यभूतधर्मपदार्थः को नामेति जिज्ञासायां धर्मशब्दोऽयं धारणार्थक धृञ्धातो रौणादिक मन्प्रत्ययेन निष्पन्नो धारणकर्तृत्वर्थकः। स एवार्थो धारणाद्धर्ममित्याहुर्धर्मो धारयते धृत इत्यादि धर्म शब्दनिरुक्ति पर पद्येभ्योऽवगम्यते। "धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति। धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति" इति तैत्तिरीयोपनिषदि धर्मस्य समग्र-जगदाश्रयत्वमुक्तम्। जीवादृष्टनिमित्तैव तदुपभोगाय जगत्सृष्टिःस्थितिश्चेति सत्साम्र-ब्राह्मणादिषु व्यक्तम्। तथैव जैमिनीयं सूत्रमपि- "चोदनालक्षणोऽर्थो धर्म" इति अत्र चोदनेति प्रवर्तकं वेदवाक्यमुच्यते। लक्ष्यतेऽनेनेति लक्षणं ज्ञानसाधनम् एवं च वेदवाक्ये नैव धर्मो ज्ञायते न प्रमाणान्तरेणेति धर्मे प्रत्यक्षानुमानादीनां न व्यापार इति सूचितम्। एवं च वेदविहित यागदानहोमस्वाध्यायादिरिष्टसाधनरूपो धर्म इति जैमिनिमहर्षेर्मतम्। महर्षिणा कणादेन "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म" इति सूत्रितम्। भगवता मनुनापि विद्वद्भिःसेवितः सद्भिरित्यादिना श्लोकेन तदेवोक्तम्। यागदानादिसाध्येऽपूर्वादृष्टादिपदवेद्ये आत्मसमवेतगुणविशेषेऽपि धर्मशब्दः प्रयुज्यते साध्यसाधनयोरभेदबुद्धया।

अत्र च साक्षात्प्रमाणं वेद एव स च न केनापि पुरुषविशेषेण निर्मितः किन्त्वेवमेवानादिपारम्पर्यक्रमागतः। एवं चाप्रामाण्यकारणानां भ्रमप्रमादविप्रलिप्सादीनां पुरुषदोषाणामनाप्रवेशान्नैसर्गिकं प्रामाण्यं सिद्धमिति 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशः' इति सूत्रेण महर्षिणा जैमिनिना प्रतिपादितम्। स्मृत्यादयश्च श्रुत्यर्थमाक्षात्कर्तृमन्वादि प्रणीतत्वात्तन्मूलभूतश्रुतिसत्त्वानुमानेन धर्मे प्रमाणम्। वेद-शाखानां बह्वीनां विप्रकीर्णत्वात्समग्रवेदार्थज्ञानमल्पधियामशक्यमिति मत्वा मन्वादिभिर्वेदोक्तान्येव कर्माणि स्मृतिषूपदिष्टानि इति समेषां शास्त्रविदां सिद्धान्तः। तथाच

स्मृतयोऽपि धर्मे प्रमाणम् । एवं पुराणेतिहासादीनामपि तत्तदधिकारिभेदेन धर्मबोधकानां प्रामाण्यमित्येव सनातनधर्मराजमार्गः ।

एवं च ज्ञानानां प्रामाण्य व्यवस्थापनस्य सामान्या रीतिः-यावद् बाधज्ञानं नास्ति तावत्कस्यापि अप्रामाण्यं वक्तुं न शक्यम् । यद्बाधज्ञानं नोदेति तज्ज्ञानं प्रमाणम् । एवं चाग्निहोत्रादि कर्मणां स्वर्गसाधनत्वज्ञापकवेदवाक्योत्थज्ञानस्य तेषां तत्साधकत्वाभावज्ञानरूप बाधज्ञानासम्भवेन प्रामाण्यं सुस्थिरम् । योग्यानुपलब्धिर्हि अभावप्रत्यायिका न चार्वाग्दृशा स्वर्गापूर्वादिरिन्द्रियैरनुमानैर्वा वेदितुं शक्यः अतः प्रतियोगि ज्ञानाभावादभावज्ञानं न संभवति ये तु योगिनो योगजधर्मेण पश्यन्ति अतीन्द्रियानप्यर्थांस्ते तु तत्तत्कर्मणां फलसाधकत्वं निश्चितं प्रतिपादयन्ति । तस्माद्विचारविधुराणां नास्तिकानामश्रद्धोत्पादकाः प्रलापाः श्रेयोऽर्थिभिः सर्वथाऽनादरणीयाः ।

वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः । तेषु ब्राह्मणत्वादि जातिर्जन्मकृतैव जन्धातोर्निष्पन्न-जातिशब्देऽस्यैवार्थस्य संगतेः । क्वचिद्गुणप्राधान्येन ब्राह्मणादि शब्दव्यवहारनिरूपण तु गौण्या वृत्त्या सिद्धो देवदत्त इतिवत् । ब्राह्मणादिजातिश्च तत्तज्जातीय गुणसहकृतैव प्रशस्यते-ऽन्यथा गर्हणास्पदं भवति । अत एवोक्तं भाष्यकृता पतञ्जलिना-विद्या तपश्च योनिश्च त्रयं ब्राह्मण कारणम् विद्यातपोभ्यां यो हीनो जातिब्राह्मण एव सः । तस्मात्तद्विशिष्ट जात्युत्पन्नैःस्वजात्यु-चित गुणकर्मसंरक्षणे महान्प्रयत्नो विधेयः । एतेषां वर्णानां पृथक्पृथग्विशेष धर्मा ये च सामान्या धर्मा वेदेषूपदिष्टास्ते वर्णधर्माः । आश्रमाश्च ब्रह्मचर्यगार्हस्थ्यवानप्रस्थसन्यासा-ख्याश्चत्वारः प्रसिद्धाः । ते च वयोऽवस्थाक्रमेण प्राणिनामभ्युदयनिःश्रेयससाधनानुकूलता सिद्धये वेदैरुपदिष्टाः ॥ ब्रह्मचर्यं परिसमाप्य गृही भवेद् गृहीभूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत् । यदिवेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा" इत्यादि वाक्यैः । तेषां च पृथक्पृथग्धर्मा सामान्यधर्माश्च ये वेदैरुक्तास्त आश्रमधर्माः तद्विवेचने लेखगौरवं स्यादतो नात्र विस्तरः क्रियते ।

एवं विधान्वेदप्रतिपादितान्धर्मान्पालयन्तो भारतीयाः पुरा स्वां स्वां मर्यादां रेखामात्र-मपि नात्यक्रामन् । दण्डधराश्च क्षत्रसार्वभौमा मनुमान्धातृप्रभृतयो दण्डेन धर्मव्यतिक्रमं न्यवारयन् ।

तत्काले इदं भारतवर्षं महामहिमसंपन्नं पुरन्दरपुरस्पर्द्धिसमृद्ध्यतिशय विश्वविख्यात विविधविद्याविभवं कलाकौशलेषु भूमण्डलातिशायि करतलामलकवत्प्रत्यक्षीकृत निगमागम-रहस्यैर्महामुनिवरैः स्वजन्मना पवित्रीकृतं निखिलजगदध्यक्षेण भगवता नारायणेन तत्तदवसरेषु धर्मत्राणायाधर्मध्वंसनाय च रामकृष्णाद्यवतारधारणेनानुगृहीत नन्दनवनाधिक कमनीयं बभूवेति पुरातनेतिहासप्रसिद्धम् । तदानीन्तनानां मनुजानामेतादृशसुखसंपत्तिहेतुश्च धर्म एवेति निश्चप्रचं विदुषाम् ।

अत एतद्विपत्समुद्धरणोपायोऽवश्यं चिन्तनीयोऽनुष्ठेयश्च प्रज्ञावद्भिः। तथाचोक्तम्-परिच्छेदो हि पाण्डित्यं यदापन्ना विपत्तयः। अपरिच्छेदकर्तृणामापदः स्युः पदे पदे॥ इति। परिच्छेद आपत्प्रतीकारोपायनिश्चयः। दोषे प्रतिसमाधानमज्ञाते क्रियतां कथम् इत्युक्त्यनुसारेणाधःपातकारण विज्ञायैव तन्निवर्तनोपायः सुकरः।

भिषग्वरा हि रोगस्य निदानं लक्षणैः सम्यगवगम्य रोगनिवृत्तये रोगार्त्तेभ्यो भेषजानि प्रयच्छन्ति। या च व्यक्तेर्गतिः सैव व्यक्तिसमूहात्मकस्य राष्ट्रस्यापि। पिण्डब्रह्माण्डयोः परस्परसम्बद्धत्वात्। यथा च विहिताशनपानाद्युपयोगेन वातपित्तादि धातुसाम्ये शरीर स्वास्थ्यं भवति। निषिद्धाहारविहारसेवनेन च धातुवैषम्ये दुश्चिकित्स्या रोगा उद्भवन्ति। तथैव राष्ट्रशरीरघटकब्राह्मणादिवर्णानां यथाधिकारं शास्त्रविहितधर्मानुष्ठानपरायणत्वे धर्ममर्यादाऽनतिक्रमे समग्रमपि राष्ट्रं स्वस्य शरीरमिव सुखितमास्ते। धर्माख्यप्राणशक्ति प्रभावेण च न कोऽपि तदाक्रमितुमुत्सहते। आक्रमणं कुर्वन्नपि अश्मनि लोष्ठमिव चूर्णो भवति। यदा तूत्पथं व्रजति स्वप्रकृतिविरुद्धनिषिद्धाचारमवलम्बते तदावर्णाश्रमव्यवस्थायां सङ्कीर्णायां धर्माख्यप्राणशक्तिह्रासेनागणितयातनापरम्परामनुभवति। हिताहितविवेकोपदर्शकशास्त्रचक्षुर्विरहितं राष्ट्रमन्धे तमसि निमज्जति। एतादृशोऽधःपात इदानीं भारतवासिभिरनुभूयते। दुर्भिक्ष जलप्रलय महामारी राजकोपाद्युपद्रव परिभूता जनाः कान्दिशीकाः सन्तः किमपि शरण न पश्यन्ति। दुःखमूलमजानन्तः परिणतौ दुःखजनकान्येव कर्माणि कुर्वन्ति। परमपावनस्य निखिल पुरुषार्थैकनिदानस्य भगवतः सनातनधर्मस्य स्वसद्मन्येव भारतभूमण्डले पामरजनैरवहेलन क्रियते। यद् दृष्ट्वा धार्मिकजनमनस्स्वकथ्या व्यथा भवति। अधर्मः खलु सर्वानर्थबीजमिति धर्मग्रन्थेषु बहुशोनिरूपितम्। तथाह्याह भगवान्मनुः न सीदन्नपि धर्मेण मनोऽधर्मेनिवेशयेत्। अधार्मिकाणां पापानामाशु पश्यन्विपर्ययम्॥ नाधर्मश्चरितो लोके सद्यः फलति गौरिव। शनैरावर्तमानस्तु कर्तुर्मूलानि कृन्तति॥ यदि नात्मनि पुत्रेषु न चेत्पुत्रेषु नप्तृषु। न त्वेव तु कृतोऽधर्मः कर्तुर्भवति निष्फलः॥ अधर्मेणैधते तावत्ततो भद्राणि पश्यति। ततः सपत्नाञ्जयति समूलस्तु विनश्यति॥ एवमन्यत्राप्युक्तमहर्षिभिः-ना धर्मःखड्गमादाय शिर कृन्तति यस्यचित्। अधर्मबलमेतावद्विपरीतार्थदर्शनम्॥ विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नर पतनमृच्छति। वेनो विनष्टोऽविनयान्नहुषश्च पार्थिवः। सुदा पैजवनश्चैव सुमुखो निमिरेव च। सांख्यशास्त्रेऽप्युक्तम् धर्मेगमनमूर्ध्वं गमनमधस्तादधर्मेणेति। आयुर्वेदशास्त्रे चरके विमानस्थाने जनपदोद्धंसनीयाध्याये महामार्यादीनां च जनपदव्यापकोपद्रवाणां सूक्ष्मकारणम् धर्म इत्येव निरूपितम्। सर्वेषां वाय्वादीनां यद्वैगुण्यमुत्पद्यते तस्य मूलमधर्मः तन्मूलं चासत्कमपूर्वकृत तयोर्योनिःप्रज्ञापराध एव। तद्यथा यदा देशनगरनिगमजनपदप्रधाना धर्ममुत्क्रम्याधर्मेण प्रजां प्रवर्तयन्ति तदाश्रितोपाश्रिताः पौरजानपदा व्यवहारोपजीविनश्च तमधर्ममभिवर्द्धयन्ति। ततः सोऽधर्म प्रसभं धर्ममन्तर्धत्ते ततस्तेऽन्तर्हितधर्माणो देवताभिरपि त्यज्यन्ते। तेषां तथान्तर्हित धर्माणामधर्मप्रधानानामपक्रान्तदेवतानामृतवो व्यापद्यन्ते तेन नापो यथाकालं देवो वर्षति न वा वर्षति विकृत वा वर्षति। वाता न सम्यगभियान्ति। क्षितिर्व्यापद्यते। सलिलान्युपशुष्यन्ति ओषधयः स्वभावं परिहायापद्यन्ते विकृतिम्। तत उद्ध्वसन्ते जनपदाः स्पर्शाभ्यवहार्य दोषादिति। वर्णव्यवस्था भङ्गोऽपि महान्तमनर्थंजनयतीति भगवता वेदव्यासेन पार्थमुखेन स्पष्टमेव प्रतिपादितं सङ्करो नरकायैव कुलघ्नानां कुलस्य चेति।

ब्रह्मचर्याद्याश्रमव्यवस्थालोपाच्च शरीरदार्ढ्यविविधविद्यानुशीलनबुद्धिविकासादीनां गुणानामभावात्पुरुषार्थसाधनाक्षमत्वं प्रमादित्वं रोगित्वमल्पायुष्ट्वं चेत्यादयो दोषाः प्रत्यक्षी क्रियन्त एव लोकेषु। सोऽयमधर्मो भारते सार्वभौमक्षत्रिय राज्यविलयादारभ्य शनैः शनैः कृतपदो निग्रहकर्तुरभावादभिवृद्धिमुपगतः प्रजासु। ये च धर्मसंस्कारा प्रजानां सुदृढा आसंस्ते प्रमादपारवश्येन क्रमशः शैथिल्यमुपगताः।

तदुत्तरं श्रुतिस्मृतिमार्गदूषकाणां बौद्धार्हतादिमतानां प्रादुर्भावो जातः। येन भारतं मिथ्या ज्ञानान्धकारच्छन्नं बभूव। तत्र तमोऽप्रतिमज्ञानप्रतिभैश्वर्यसम्पन्नैः शिवावतारैः श्रीमच्छङ्कराचार्यैर्विरञ्च्यवतारैः श्री कुमारिलभट्टैश्च ज्ञानसूर्यप्रकाशेनापूर्वव्यक्तिप्रभावेणच निवारित प्रतिष्ठापितश्च पुनरपि पवित्रः सनातनधर्मः। पुनरपि केनचिद्भाग्यविपर्यासेन भारते यवना नामाक्रमणं जातम्। तदा च तत्प्रतिकारसमर्थचक्रवर्तिनरेन्द्राभावाद्यवनाक्रान्तभारतीयैर्या कष्टदशाऽनुभूता सा शब्दैरुपवर्णयितुं न शक्या। निजमतक्रुराग्रहग्रहग्रस्तै नरपिशाचैर्म्लेच्छैर-सङ्ख्या दिव्यदेवालया भूमिशरणाः कृताः। अनेके पुरग्रामा दग्धाः। महता क्लेशेन भारतीय विपश्चित्प्रवरैश्चिरकालोपार्जिता ज्ञानभाण्डागारा पुस्तकालया नामशेषीकृताः। अनेके निरपराधा दीना आर्यजना निर्घृणतया व्यापादिताः। रत्नमाणिक्यसुवर्णकोषा पश्यतो हरैर्लुण्टिता। किं किं न कृतं क्रूरैः। तस्मिन्नपि काले भारतीयाः प्राणपणेनापि रक्षितवन्तः स्वधर्मम्। यतस्तद् बाह्यं शारीरमाक्रमणमासीत्। नेदानीन्तनमिवान्तरम्। परमकृपालुनापरमेश्वरेण तादृशे समये प्रेरिताः श्रीमन्महाराजप्रतापसिंह श्रीशिवाजी महाराजप्रभृतयो नरेन्द्रा धर्मरक्षणाय बद्धपरिकराः क्षणमप्यविश्राम्यन्तो म्लेच्छानुन्मीलयन्त आजीवनमरक्षन्सद्धर्मम्। तदनन्तरं च स्वीयदोषै रेव यवनानां साम्राज्यभ्रंशे सति वैदेशिकानामाङ्ग्लानां शासनं जातम्। ते च पूर्वं राज्यनीति-निपुणतया भारतीयानां स्वस्वधर्माचरणे हस्तक्षेपो न कर्तव्य इति निश्चित्य तादृस्थ्यवृत्तिमा-श्रितवन्तश्चिराय। तेन च तच्छासने निरुपद्रवाः प्रजाः सुखेन स्वधर्ममन्वतिष्ठन्। किन्तु तत्समुद्भावित शिक्षणपद्धतौ प्राचीनसनातनधर्मशिक्षणस्य निवेशाभावात्प्राक्तन पद्धत्या ज्ञान-दानं कुर्वतां विद्यालयानां च पोषकसंख्यान्यूनीभावाद्राजकीयसाहाय्यस्य मन्दत्वाल्लोकानां प्रमादग्रस्तत्वाद् ब्राह्मणानां च जीविकाकार्पण्याकुलीभूतानां कर्तव्यप्रतिपत्त्यभावाच्च क्रमशो धर्मशिक्षणस्य ह्रासे सति आर्यसभ्यताया आर्यसंस्कृतेश्च क्षयस्य सूत्रपातः संजातः। निसर्गत पश्वार्थकामप्रधानानां मनुजानां कुलक्रमागता धर्माः कृलङ्कषतरङ्गिणीतीरपवेगाहतद्रुमा इव विषयकलि प्रभावाद्विशीर्णमूला विलयंगताः। तत्फलरूपमेवेदानीं प्रजानां मोहप्रमादप्रयुक्त स्वच्छन्दाचार विहारादिकं धर्मद्वेषित्वं च।

वैदेशिकशासकसमागमे तदीय शौर्यधैर्य कर्तव्यपरायणत्व नियतसमयकार्यकरत्वादयो नूतनविद्याकलान्वेषणपूर्वकाविष्कारादयो गुणा नानुकृता मन्दप्रज्ञैः किन्तु तदीयाचारविचार विहारवेषादीनां वानरानुकरणमात्रनिरताः संवृत्ता भारतीयाः। वैदेशिकशिक्षणालयेषु लब्ध-शिक्षाः पाश्चात्यभावनाक्रान्तमतयो बहवः स्वप्नेऽप्यनाघ्रातार्षधर्मग्रन्थाः प्राचीनान्सदाचारा-नुन्मूलयितुं सन्नद्धाः। किमतोऽधिकं शोचनीयम्। एतादृशैश्च राजशासनसभायां समग्रन्थमा-पन्नैर्धर्मध्वंसीनि शारदाएक्ट प्रभृतीनि युवती विवाह विधायकानि द्वादशवर्षवयस्क कन्यादान प्रतिषेधकानि विधानानि प्रस्तावपूर्वक साग्रहं समर्थितानि। ब्रिटिश सम्राट्प्रति-निधिभिश्च धर्मविषये पूर्वं महाराज्ञीसमुद्घोषितं तादृस्थ्यमनादृत्य तानि स्थिरीकृतानि।

यैः सनातनधर्मानुयायिनां यथाशास्त्रं यथाकालं कन्याप्रदानाख्य धर्मकार्ये महान्प्रतिबन्धः कृतः। एतद्विरोधाय श्रीमद्धर्मप्राणगुरुवर्य श्रीमल्लक्ष्मणशास्त्रिप्रभृतिभिर्विद्वद्वरैर्महदान्दोलनं कृतम्। असंख्यानि विरोधप्रदर्शकपत्राणि धार्मिकजनताहस्ताक्षराङ्कितानि सम्राट्प्रतिनिधिसविधे प्रेषितानि किन्तु मतिवैपरीत्यात्तत्सर्वमनादृतं ततः इत्येव व्याकुलीभूते धर्ममार्गे सुधारकम्मन्य-जनाविष्कृतानेककुशङ्कानिवारणाय कन्योद्वाहकालस्य शास्त्रीय निर्णयाय च काशीस्थैः गुरुवर्य-शास्त्रिमहोदयैर्वङ्गदेशस्थैर्म. म. श्री पञ्चानन तर्करत्नप्रभृतिभिर्माननीयैर्विद्वद्भिश्चमिलित्वा अखिलभारतवर्षीय ब्राह्मणमहासंमेलनं काश्यामायोजितम्। तत्र च परः सहस्रास्तत्तद्देशीया ऋषिकल्पाः पण्डितप्रवरा उपस्थिताः। शैववैष्णव-धर्माचार्याश्च महासभा विभूषितवन्तः। पण्डितैः शङ्कासमाधानानि कृतानि। मध्यस्थैः पण्डितप्रवरैः समालोचनपूर्वकं यथाशास्त्रं निर्णयाः कृताः। ते च धर्माचार्यैः स्वानुमत्या दृढीकृताः।

तदुत्तरं धार्मिक जनतानां सङ्घशक्त्यभावाद्धर्माचरणप्रतिबन्धकानि राजकीय विधानानि प्रादुर्भवन्तीत्यालोच्यैतदनर्थनिवारणाय वर्णाश्रमस्वराज्यसंघनाम्नी एका महती समिति विद्वद्भिः काश्यां स्थापिता तदुपदेशानुसारेण भारते पराः सहस्रास्तदीयशाखासभाः संजाताः तदीय वार्षिक महाधिवेशनानि प्रतिवर्षं विभिन्नस्थानेषु भवन्ति। यत्र सर्वेऽपि धर्माचार्या धर्मरक्षणकार्ये एकमतीभूय संमिलन्ति। व. स्व. संघस्य सभ्याः पण्डितवर्या धार्मिकजनाश्चोपतिष्ठन्ते। परस्परविचारादानप्रदानेन शङ्कासमाधानैः प्रभावशालिभिर्व्याख्यानैश्च धर्मे महतीं जागर्त्तिं जनमनस्सु समुत्पादयन्तीति महदेतद्धर्मस्थानम्। तत्र च धर्मसंरक्षणाय प्रचाराय च ये प्रस्तावा निर्णीयन्ते तेषामनुष्ठानं याथातथ्येन स्याच्चेत्तर्हि धार्मिकान्दोलनं व्यापकं स्यात्। अतस्तत्र सर्वैर्धार्मिकैर्मनो वाकायवित्तसाहाय्यं प्रदेयम्। 'संघे शक्तिः कलौयुगे' इति वचनं यथार्थं मत्वा संघशक्तिरवश्यं संवर्धनीया।

धर्मद्रोहिणां प्राबल्यं चैतदपेक्षयाऽधिकतरमधुना वर्तते तत्र कारणानिपूर्वं प्रदर्शितान्येव। तदुपशमनाय सर्वेषामपि सम्मत्युत्पादनाय च महान्प्रयत्नः कर्तव्योऽवशिष्यते। अयं च धर्मप्रचारः सर्वेषां प्राणिनां हितायैव प्रयत्यते न कस्यापिक्लेशोत्पादनाय। यतः सनातन धर्मस्यैतदेव वैशिष्ट्यं यत्तत्तद्विशेषधर्मानुष्ठाने तत्तदधिकारिभेदव्यवस्थापनेऽपि कस्यचिद्द्रोह गन्धोप्यत्र नास्ति। यत प्रत्यहं धार्मिकैरनुष्ठीयमान पञ्चमहायज्ञेषु आब्रह्मस्तम्बपर्यन्तानां तृप्तिरुद्दिश्यते। सर्वेषां भद्रमेवाशास्यते। एवं च सुधारकम्मन्याः कालबलेन विपरीतमतयो भूत्वा वर्णाश्रम धर्मात्मनः प्रतिपक्षं मन्यन्ते यत् तत्तेषामज्ञानविजृम्भणमेव। तेऽपि खलु भारत मातुः सन्ताना अस्मदीया बन्धव एव। यदि ते वस्तुतो देशहितकामास्तर्हि दुराग्रह ग्रहमासाद्यात्मानं विमुच्य मृषावाग्वादं विहाय च ते विद्वद्भ्यः शास्त्रतात्पर्यमवगन्तव्यं परिणामे हितकरश्चपन्थाः समाश्रयणीय। यदि तेषां मनसि कचिद्विषये शङ्का स्यात्तर्हि तैः शास्त्ररहस्याभिज्ञविद्वत्समीपे गन्तव्यम। शङ्काविषयः प्रष्टव्य। ते खलु विद्वांस सयुक्तिकैः सप्रमाणैश्च वचनैरवश्यं तेषां शंकां निवर्तयेयुः। यथाऽऽरोग्यकामेन रोगनिवारणार्थं सद्वैद्यसमीपं गत्वौषधं ग्रहीतव्यं श्रद्धया च तत्सेवितव्य न तूपेक्षितव्यं न वा वैद्यायासयितव्यं न चौषधं त्यक्तव्यम्। एवमत्रापि।

शङ्कानिवर्तनप्रकाराश्च भूयांसः शास्त्रेषूपलभ्यन्ते। तथा हि स्वर्गापूर्वाद्यतीन्द्रियार्थ प्रतिपादकवेदभागस्य प्रामाण्ये संदिहानं पुरुषं व्युत्पादयितुं न्यायशास्त्रकृता भगवता गौतमेन 'मन्त्रायुर्वेदवच्च तत्प्रामाण्यम्' इति सूत्रेण, दृष्टफलकेषु सर्पवृश्चिकादि विषापनोदकमन्त्रेषु, आयुर्वेदोक्तौषधोपयोगेन च व्याधिनिवृत्त्यात्मकफलदर्शनेनायुर्वेदे च निश्चितं प्रामाण्यं सर्वेषामतस्तद्दृष्टान्तेनातीन्द्रियार्थबोधकवेदभागस्यापि प्रामाण्यमनुमेयमिति निरूपितम्। एवमन्येऽपि तत्तद्ग्रन्थेषु सन्त्याशङ्कोन्मूलनकरा विचारा।

यच्च केचिदिदानीं वावदूका वदन्ति देशकालपरिस्थित्यनुसारेण नूतना धर्मग्रन्थरचना कर्तव्येति। एतद्वचनमप्यर्थशून्यमेव। यत पूर्वनिरूपितप्रामाण्यविचारानुसारेणापौरुषेयवेदवाक्यानि तदनुसारिणीश्च स्मृतीर्विहाय भ्रमप्रमादादिदोषग्रस्त पुरुषवाक्येषु न कस्याप्याश्वास सभवति। अपि च स्वेच्छया नूतनस्मृतिनिर्माणेऽव्यवस्थित एव धर्मः स्यात् यदिदानीं तेभ्योरोचते तत्किञ्चित्कालोत्तरमितरेषामरुचिकरं स्यात्तर्हि तदपि त्यक्त्वा ऽन्यन्निर्मेयमित्येव मनःकल्पित व्यवस्थायामाश्रीयमाणायां धर्मस्य स्वरूपमेवोच्छिद्येत। तस्माद्यथास्थितश्रुतिस्मृत्यादिग्रन्थाश्रयणमेव न्याय्यम्।

सर्वानर्थहेत्वधर्मनिवृत्तिपुरःसरं धर्मप्रवर्तनायेदानीं महान्प्रयत्नो विधातुमुचितः। तदर्थं धर्माचार्यैर्मठाध्यक्षैश्चाग्रतो भूत्वा महती प्रवृत्तिरारम्भणीया। एवं विद्वत्प्रवरैः संस्कृत पाठशालास्वधीयानानां छात्राणां मन्वादिधर्मशास्त्रेषु महाभारताद्याकरग्रन्थस्थेषु धर्मोद्बोधकेष्वाख्यानोपाख्यानेषु च प्रावीण्यसंपादनाय प्रयतितव्यम्। येन ते स्वयं धर्मस्वरूपं ज्ञातुं शक्नुयुरितरेभ्यश्चोपदेष्टुम्।

इदानीं तु किं दृश्यते, संस्कृतपाठशालास्वधीयाना अपिच्छात्रा केशवेशाचारविचारादिष्वांग्लविद्यार्थ्यनुकरणं कुर्वाणास्तत्तत्परीक्षाप्रदानतात्पर्येण ग्रन्थान्पठन्तो ब्रह्मचर्यव्रते सन्ध्याजपहोमादिनित्यकर्मसु च सर्वथोपेक्षावृत्तिमवलम्बमाना दृश्यन्ते। न सम्यक् शास्त्ररहस्यमवबुध्यन्ते पवित्रविद्याध्ययनोचितसद्गुणसंपन्ना श्रद्धाभक्तियुताश्च न भवन्ति। एवंविधसच्चारित्र्यविहीनानामेषामध्ययनेन को लाभः। नहि तेषामध्ययनस्य व्यावहारिक व्यवसायेष्वस्त्युपयोग यत्र चोपयोगो धर्मकार्येषु, सदुपदेशप्रदानेषु विद्यालयेष्वध्यापनकार्ये च तद्योग्यतासंपादनमेतादृशाचारैर्दुष्करमेव। येऽपि धार्मिकाः सुरभारत्या पोषण धर्मबुद्ध्या कुर्वन्ति तेषां मनःसु संस्कृतविद्यार्थिनामनुचितमाचरणं दृष्ट्वा श्रद्धाया न्यूनता भवति। तस्मात्पाठशालाध्यापकैर्विद्यार्थिनां सदाचारे स्थापनं प्रयत्नेन संपादनीयम् प्राधान्येन।

वक्तृत्वकलायाश्चास्मिन्समये महत्यपेक्षाऽस्ति। सा च नैसर्गिकशक्तिमनेकशास्त्रावलोकनजन्यं विशालज्ञानं चापेक्षते। अतो येषां तादृशी पटुता निसर्गतः स्यात्तेभ्यो व्याख्यानोपयुक्त श्रुतिवाक्यसंग्रहो महाभारताद्युपवर्णिताख्यानोपाख्यानसंग्रहश्चोपदर्शनीय स्तत्तद्ग्रन्थावलोकनाय च प्रवर्तयितव्यास्ते। वर्तमानकालप्रचलितकुतर्काणां समाधानप्रकारश्चोपदेष्टव्यः।

ये चाङ्ग्लविद्यालयेष्वधीत्य बी ए, एम ए. प्रभृतिपदवीभाजः पाश्चात्योपदर्शितरीत्या किंचिद्वेदार्थज्ञानं प्राप्नुवन्ति तेषां दृष्टिर्वेदेभ्य प्राचीनवृत्तान्तान्वेषणे एव निमज्जति न ततोऽधिक किंचिद्वेदेषु पश्यन्ति। तदेतेषां कार्यं काकदन्तपरीक्षावन्निष्फलमेव। यत स्वाध्यायोऽध्येतव्य इति विधिना ऐहिकामुष्मिकसुखसाधककर्मोपासनादेरवबोधपूर्वकमनुष्ठानमेवाध्ययन फलत्वेनाभिप्रेतम्। तदेतेषां न सिध्यति। अतस्तैः कपिचेष्टितं परिहृत्य गुरुभ्यो वेदवेदार्थ

ज्ञानं विध्यनुसारेण संपादयितव्यं सत्यधिकारे। तदुक्तधर्मानुष्ठानं च विधेयं येन ते लोकद्वये सुखिनः स्युः।

यच्चेदानीं महारुद्रविष्णुयागादिकं स्मार्तं धर्मकार्यं प्रवर्तते तत्केवलवेदपाठिभिरर्थ ज्ञानशून्यैः स्वयं तद्रहस्यमजानद्भिर्यथालब्धपद्धतिग्रन्थाननुसृत्यैव कार्यते। नकोऽपि तत्तत्कर्म-मीमांसांकरोति-किमेतस्य कर्मणो मूलभूतं प्रमाणं कोऽस्याङ्गी किंचाङ्गम् इत्यादिकं न विचिन्त्य मि तेन कर्मसाद्गुण्यं न भवति विहितः क्रमः प्रायश्चैव न रक्ष्यते। अतोऽधीतवेदैर्लब्ध-व्याकरणादिज्ञानैरधिगतवेदार्थैरधीतमीमांसैश्च तत्तत्कल्पग्रन्थान्संगृह्य सम्यगभ्यस्य यजमाना-दयो बोधनीयाः। इदं हि ज्ञानं स्वपरोपकारसमर्थं भविष्यति। एवं ज्यौतिषवैद्यकादीनि दृष्टफलानि शास्त्राण्यपि वेदव्याकरणज्ञानपुरस्सरं संपूर्णानि सूक्ष्मेक्षिकयाऽभ्यसनीयानि। अन्यथा ' ज्ञानलवदुर्विदग्धं ब्रह्मापि च तं नरं न रञ्जयति " इत्युपालम्भपात्रता भवति। एत च सर्वं कदा संभाव्यते, यदा प्राचीना ऋष्याश्रमा इव विद्यालया लौकिकवातावरणरहितेष्वे-कान्तप्रदेशेषु स्थापिताः स्युः तत्र च दश द्वादश वा वर्षाणि यावद् गुरुसमीप एवच्छात्रा निवसेयुर्ब्रह्मचर्यव्रतं च पालयेयुरन्तेवासिपदमन्वर्थयेयुस्तदैव।

ब्राह्मणादिद्विजैश्च स्वबालकानां गर्भाधानादयः संस्कारा यथाकालं यथाविधि कर्तव्याः। तत्र प्रमादो न कर्तव्य। एतान्प्रकारान्विहाय नास्त्यपरः पन्था भारतीयप्रजानामुन्नतिप्राप्तये।

इदानीं नेतृत्वेन प्रसिद्धैर्देशहितकामनया स्वप्रयत्नोद्देश्यत्वेनोद्घुष्यमाणं स्वराज्यं दृढतरधर्मानुष्ठानमन्तरा दुर्लभमेव। कदाचित् पूर्वजपुण्यविभवेन प्राप्येत तथापि शारीरदार्ढ्यं मानसोत्तमगुणरहितानां धर्मभावनाविहीनानां विपरीतकर्मनिरतानां पशुप्रायमापन्नानां तत्कस्मै फलाय कल्पेत। मर्कटस्य मुक्तामालेव व्यर्थीभवेत्। तस्मात्सद्धर्मसदाचारसद्गुण-समर्जने सर्वैः संभूय सच्छास्त्रमर्यादानतिक्रमेण प्रवर्तितव्यम्।

अनर्गलं धर्मध्वंसं दृष्ट्वाऽतीव सन्तप्तमानसा धर्मप्राणाः श्रीमद्गुरुवर्याः शास्त्रिमहोदया ब्रा० म० सं० समये काशीं गतस्य मम पुरः स्वीयहृदयस्य दुःखोद्गारान्भृशं प्रकटयन्ति स्म। तथैवान्येषां पुरतोऽपि। जलग्रामे व० स्व० सं० महाधिवेशनस्य साफल्यसिद्धये बहुकालं तत्तत्प्रदेशेषु चरन्त आहारशय्यादिप्रातिकूल्यमप्यगणयन्तो जीवननिरपेक्षतयाऽति महता श्रमेण धर्मोद्बोधनमकार्षुः। यादृशी धर्मध्वंसदर्शनेन तेषां मनसि तीव्रवेदना समजायत यादृशी चोत्कण्ठा धर्मसंरक्षणस्य यादृशश्चोत्साहो या च लोकचित्ताकर्षणशक्तिः या च सुधाक्षरी वाङ्माधुरी या चापूर्वा प्रोद्बोधनरीतिः तदेकांशमात्रमपि यदि प्राप्येत किं दुष्करं स्यात्। एते हि समस्तदर्शनस्वतन्त्रप्रज्ञा मीमांसाद्वयनिःशेषरहस्यविदो वेदान्त-सिद्धान्तपारदृश्वानः समधिगतवेदवेदार्थाश्चिरमद्भुताध्यापनशैल्या कृपापीयूषवर्षिण्या दृष्ट्या च परःसहस्राञ्छिष्यान्दर्शनशास्त्राणामुच्चतमवेदान्तप्रबन्धानां च ज्ञानप्रदानेन कृतार्थी-कृतवन्तः। अतोऽध्यापनव्यवसाये सर्वदा रुचिरेषां चेतसि जाग्रत्यासीत्। तथापि धर्म-ध्वंसं सर्वतः प्रसरन्तं विलोक्यातिखिन्नमानसास्ते धर्मसंरक्षणार्थं धार्मिकजनसंघशक्ति विवर्धनार्थं च प्रतिग्रामं प्रतिनगरं च व्यचरन्।

श्रीमद्गुरुचरणेषु विष्णुपदं प्रयातेषु महती हानिः सनातन धर्मरक्षण कार्यस्य संजाता। इत परमस्माकं तदुपदर्शितदिगनुसरणमेव मुख्यो धर्मः। करुणामृतपूर्णदृष्टि भगवान्सच्चिन्मङ्गलालंकृतविग्रहः श्रीमदीश्वरो धर्मरक्षां विदधातु वितनोतु सतां शाश्वतिकं श्रेय इति शिवम्॥

# वेणुधर




धौरी धूसरि सामरी गैयन सोहत स्याम ।
वेनु बजावत मधुर सुर सुरभिन रिच जनु काम ॥

# वेणुधर




धौरी धूसरि सामरी गैयन मोहन स्याम ।
वेनु बजावत मधुर सुर सुरभिन चित्त जनु काम ॥



# पूज्य धर्मप्राण श्री लक्ष्मणशास्त्री द्रविड

# स्मारक ग्रन्थः ।



## हिन्दी विभाग ।



सर्वोद्धारप्रयत्नात्मा कृष्णः प्रादुर्बभूव ह ।



## श्रीकृष्णका सर्वोद्धारसामर्थ्य

पू. टिकायत गोस्वामी
श्री दामोदरलालजी महाराज

नमो भगवते तस्मै कृष्णायाद्भुतकर्मणे ।
रूपनामविभेदेन जगत् क्रीडति यो यतः ॥

श्री पुरुषोत्तम भगवान्के अनेक अवतार हुए हैं। किन्तु श्रीकृष्णके समान कोई अवतार नहीं हुआ। श्रीकृष्णका अवतार पूर्ण है। जब जगत्का उद्धार करना होता है तब ही श्रीकृष्णका अवतार होता है। अत एव श्रीमद्वल्लभाचार्यचरणने आज्ञा की है कि 'सर्वोद्धारप्रयत्नात्मा कृष्णः प्रादुर्बभूव ह' अर्थात् सबके उद्धारका सामर्थ्य अपने साथ लेकर श्री कृष्ण अपने पूर्ण स्वरूपसे प्रकट होते हैं।

मर्यादामार्गमें अपने उद्धारका सामर्थ्य जीवको अपने साथ रखना पड़ता है। किन्तु अनुग्रहमार्गमें जीवके उद्धारका प्रयत्न जीवको नहीं करना पडता पर श्रीकृष्णही जीवके उद्धारका प्रयत्न अपने साथ लेकर प्रकट होते हैं। इसलिये कहा कि 'प्रयत्नात्मा' अर्थात् जीवके उद्धारका प्रयत्न जिसके स्वरूपमें है वे श्रीकृष्ण प्रकट हुए।

एक साधनसामर्थ्य होता है, और दूसरा स्वरूपसामर्थ्य। साधन सामर्थ्य परतन्त्र होता है किन्तु स्वरूपसामर्थ्य स्वतन्त्र होता है। साधनसामर्थ्यको प्रमाणवल कहते हैं और स्वरूपसामर्थ्यको प्रमेयबल कहते हैं। वेदादिशास्त्र और तदुक्तसाधन प्रमाण कहे जाते हैं, और श्रीकृष्णको स्वरूप किंवा प्रमेय कहा गया है। श्रीकृष्णका सामर्थ्य श्रीकृष्णके पासही नित्य विद्यमान रहता है इस लिये स्वरूपसामर्थ्य स्वतन्त्र है। किन्तु प्रमाणका बल देश काल द्रव्य कर्ता मन्त्र और कर्मप्रकारके वश है इसलिये वह परतन्त्र है।

वेद श्रीकृष्ण परब्रह्मके निःश्वास हैं, इसलिये, वेद और वेदोक्तसाधनोंका सामर्थ्य श्रीकृष्णका दिया हुआ है और अतएव परतन्त्र है। यह बात निश्चित है कि विधिपूर्वक वेदाध्ययन करनेवालेका उद्धार होता है किन्तु यह भी बात निश्चित है कि वेदका अध्ययन देश काल अधिकार और प्रकारके परतन्त्र है।

वेदके पढनेका वही अधिकारी है जो तीन पीढीसे उपनीत होता चला आया है। जिसकी तीन पीढीसे जनेउ ही नहीं होता वह वेद पढनेका अधिकारी नहीं है। अनधिकारी यदि वेद पढ भी जाय तो वैसा अध्ययन उसका उद्धार नहीं कर सक्ता। क्यों कि वेदका सामर्थ्य स्वतन्त्र नहीं, किन्तु परतन्त्र है। किन्तु श्रीकृष्णने अपने स्वरूपसेही सबका उद्धार किया है, इस लिये स्वरूप सामर्थ्य स्वतन्त्र है। और अत एव हमारे श्रीमद्वल्लभाचार्यचरणने आज्ञा की है कि 'सर्वोद्धारप्रयत्नात्मा कृष्णः प्रादुर्बभूव ह'।

वेदाध्ययन करनेके लिये उत्तम स्थान उत्तम काल और उत्तम प्रकार होना चाहिये। देश काल और प्रकार उत्तम न हों तो वैसे वेदाध्ययनसे मुख्य फल नहीं होता। प्रत्युत कभी कभी तो 'स वाग्वज्रो यजमानं हिनस्ति' इस वाक्यके अनुसार प्रतिकूल फलभी हो जाता है, इसलिये मानना पड़ेगा कि वेदका सामर्थ्य स्वसाधनपरतन्त्र है।

वेदोक्त साधन तीन हैं, कर्म ज्ञान और भक्ति। ये तीनो स्वसाधन परतन्त्र हैं, स्वतन्त्र नहीं। देश, काल, द्रव्य, कर्ता, मन्त्र, और कर्म करनेका प्रकार, ये छहों साधन शुद्ध हों तबही कर्ममार्गसे उद्धार होता है, और जो ये छहों अशुद्ध हों अथवा इनमेंसे एकाद होही नहीं तो फिर कर्मसे फल नहीं होता। इस लिये कर्म स्वसाधनपरतन्त्र है।

ज्ञानमार्ग यद्यपि उत्तम है, क्यों कि गीतामें कहा है कि 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' किन्तु ज्ञानभी स्वसाधनपरतन्त्र है, स्वतन्त्र नहीं। श्रीमद्भागवतके षष्ठस्कंधमें ज्ञानके नौ साधन कहे हैं, और गीतामें भी। यदि ये साधन बराबर बन जांय तो ब्रह्मज्ञान प्राप्ति होती है, अन्यथा ब्रह्मज्ञानका उत्पन्न होना ही कठिन है, इसलिये ज्ञानमार्गभी परतन्त्र है।

तीसरा भक्तिमार्ग है. अन्य मार्गोंसे यह कुछ सरल है। किन्तु यहभी स्वसाधनपरतन्त्रहै। श्रवण कीर्तन आदि भक्तिके नौ साधनभी श्रीमद्भागवतके सप्तमस्कंधमें कहे हैं। इन नौ साधनोंके आचरणसे श्रीकृष्णमें परमप्रेमरूप भक्ति होती है, इसलिये भक्तिभी स्वसाधनपरतन्त्र है। विशेषकर भक्तिमार्ग गुरु-परतन्त्र भी है। उपदेशक गुरु यदि उत्तम हो तो भावकी उत्पत्ति होती है अन्यथा नहीं। इसी लिये जलभेद नामक ग्रंथमें भगवान् श्रीमद्वल्लभाचार्यने उपदेष्टाओंके २० भेद बताये हैं। इस लिये भक्तिमार्ग भी साधनपरतन्त्रहै। कितने ही अवतार भी साधनपरतन्त्र हैं। इसतरह वेद, वेदोक्तसाधन और अवतार ये सब साधनपरतन्त्र हैं इसलिये उनसे उद्धार होना कठिन है किन्तु प्रभुका स्वरूप सर्वथा स्वतन्त्र है। इसलिये प्रभुके स्वरूपसे सबका उद्धार होना सहज है। क्यों कि श्रीकृष्ण सबके उद्धारका प्रयत्न आप साथ लेकर ही प्रकट हुए हैं। 'सर्वोद्धार०'।

श्रीकृष्ण के स्वरूपको, साधन, अधिकार, वगैरहकी अपेक्षा नहीं है। सर्वसाधारणको साधननिरपेक्ष ही मुक्तिदान करनेके लिये श्रीकृष्णका प्रादुर्भाव है। श्रीमद्भागवतमें कहा है कि—

नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो भुवि।
अव्ययस्याऽप्रमेयस्य निर्गुणस्य गुणात्मनः॥

यह श्लोक निरोधस्कन्ध के तामसप्रकरण का है। इसकी सुबोधिनी में श्रीमद्-वल्लभाचार्यने यह सिद्ध किया है कि अपने स्वरूपसामर्थ्य से ही सर्वसाधारणको

मुक्ति देनेके लिये ही श्रीकृष्ण का प्राकट्य हुआ है और कोई कारण नहीं है। न भक्तिके लिये न भक्तोंके लिये न ज्ञानके लिये न अपने लिये और न परके लिये प्रभुका अवतार है, किन्तु श्रीकृष्ण का अवतार तो अपने स्वरूपमे सबको मोक्ष देनेके लिये ही प्रकटे हैं। सुबोधिनीके अक्षर यों हैं:—

"जहाँ मुख्य ज्ञान ओर मुख्य भक्तिके द्वारा मोक्ष होना लिखा है वहां भी ज्ञान और भक्तिसे मोक्ष नहीं होता किन्तु प्रभुके स्वरूपसे ही मोक्ष होता है। ज्ञान और भक्ति तो प्रभुके स्वरूपका आविर्भाव कर देते हैं। मोक्ष तो स्वरूपसे ही होता है। अर्थात् स्वरूपाविर्भावार्थ ही ज्ञान और भक्तिका उपयोग है। प्रभुके स्वरुपको प्रकट कराकर ज्ञान और भक्ति अलग होजाते हैं। फिर जीवका मोक्ष तो प्रभुका स्वरूप ही करता है।"

सारस्वत कल्पमें स्वेच्छासे ही प्रभुका प्राकट्य हुआ था। इस लिये ऐसे समय ज्ञान और भक्तिकी कोई आवश्यकता नहीं रहती। अवतारदशा में ज्ञान और भक्तिके द्वारा नहीं किन्तु स्वरूपसे ही सबको मोक्ष देनेके लिये प्रभुका प्राकट्य है, यह कहने के लिये ही मूल में पांच विशेषण दिये हैं। भगवान्, अप्रमेय, अव्यय, निर्गुण और गुणात्मा।

जो साधन, करनेमें आसके और समझने में आसके, उसी साधनका लोग उपयोग करते हैं।

श्रीकृष्ण न तो कृतिसाध्य हैं और न समझमें आसकते हैं। अप्रमेय होनेसे ज्ञानके साधन नहीं हो सकते और ज्ञानका विषय भी नहीं हो सकते, और अव्यय होनेसे कृतिसाध्य नहीं हो सकते, भक्तिका साधन नहीं हो सकते या भक्तिका विषय नहीं हो सकते।

इसलिये साधनमार्गसे तो भगवान् दूसरोंके उपयोगमें नहीं आसकते। ऐसी अवस्थामें यदि भगवान् साधननिरपेक्ष सबको मोक्षभी न दें तो फिर प्रभुका प्रकट होनाही व्यर्थ होजाता है। इस लिये यह मानना ही पडेगा कि श्रीकृष्ण अपने स्वरूपसे मोक्ष देनेके लिये ही प्रकट हुए हैं।

यदि कोई कहे की भजन या ध्यानमें किसी आधार (विषय)की अपेक्षा होती है, इसी लिए भक्तोंका ध्यान या भजनको सार्थक बनानेके लिये प्रभु



प. टीकायत गोस्वामी श्री. नाथद्वाराधीश्वर दामोदरलालजी महाराज

सभापति अखिल भारतवर्षीय वर्णाश्रम स्वराज्य संघ

चतुर्थ अधिवेशन, जलगाव वि १९८७

सुन्दर स्वरूप लेकर प्रकट हुए हैं। इस लिए देहादिद्वारा भजन करने लायक हैं और प्रकट भी इसी लिये हुए हैं, किन्तु यह बात भी ठीक नहीं क्यों कि प्रभु निर्गुण हैं। प्रभु में देह इन्द्रिय आदि कोईभी गुणके कार्य नहीं है। इस लिये भजनीयताके लिये भी प्रभु नहीं प्रकट हुए, किन्तु मोक्षदानके लिये ही प्रकटे हैं।

यदि कहो लीला करने के लिये श्रीकृष्ण प्रकट हुए हैं तो भी ठीक नहीं। क्यों कि सर्व जगत् ही उसकी लीला है। सर्व गुणों का वही उपादन कारण है। अपने स्वरूप से सर्व जगत् को बनाकर वही जगत्में क्रीडा कर रहे हैं। उसे इस नवीन लीलाकी कुछ आवश्यकता नहीं। लीला के लिये भी प्रादुर्भाव नहीं। इस तरह परायेके काममें आने के लिये तो प्रभुका प्राकट्य है नहीं, यह बात तीन विशेषणों से कही।

यदि कहो कि परायेके लिये न सही किन्तु भगवान्‌को ही दुष्टमारण आदि ऐसा कुछ कार्य है जिसके लिये प्रभुको यहां आना पड़ा, किन्तु यह कहना भी उचित नहीं, क्यों कि प्रभु भगवान् हैं। सर्वैश्वर्यसम्पन्न, कालकर्म स्वभावके नियामक और स्वतन्त्र, अर्थात् जो किसीकी अपेक्षा न रखनेवाला हो उसे भगवान् कहते है। ऐसे भगवान्‌को दुष्ट मारण आदि अपने कार्य के लिये भी यहां आनेकी कुछ आवश्यकता नहीं थी। इसलिये मानना चाहिये कि और कुछ नहीं, केवल साधननिरपेक्ष सर्वसाधारण को मोक्ष देनेके लिये ही श्रीकृष्ण का प्रादुर्भाव है। इसलिये आचार्यचरणने कहा है कि:— 'सर्वोद्धारप्रयत्नात्मा कृष्णः प्रा०'।

ज्ञानसाधनद्वारा मोक्ष देना यह वासुदेव का कार्य है और किसी साधन की अपेक्षा न रखकर हरएक को मोक्ष देना यह एक श्रीकृष्ण का ही सामर्थ्य है।

सर्वोद्धारप्रयत्नः आत्मनि यस्य सः। अर्थात् भक्तों को अपने अपने उद्धार करनेके लिए अपने आप प्रयत्न करने चाहिए, सो नहीं किन्तु भक्तों के उद्धार के प्रयत्न श्रीकृष्ण अपने साथ लेकर प्रकट होते हैं। भक्तों को यहां आकर अपने उद्धारके प्रयत्न नहीं करने पडते किन्तु उनके लिये भगवान् प्रयत्न करते हैं। गीतामें प्रभुने आज्ञाभी की है कि:—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥

जो लोग अनन्य चिन्तन करते हुए मेरी उपासना करते हैं, उन सदा मेरा अनन्य चिन्तन करनेवालोंका योगक्षेम मैं पहुंचाता हूं। अप्राप्तकी प्राप्तिको योग कहते हैं। और प्राप्तकी रक्षा करना क्षेम कहा जाता है। ज्ञान और भक्ति भगवान्के दिये विना नहीं मिल सकता इस लिये दोनोंका नाम योग है और प्राप्त हुए ज्ञानभक्तिका रक्षण भगवान् ही करते हैं।

योगक्षेमका अर्थ केवल भोजनाच्छादन और व्यापार नहीं है। इतनेसे फल देनेके लिये प्रभु प्रकट होते हैं यह कहना तो मूर्खता है। भोजनाच्छादनादिक तो अपने आप पूर्व पूर्व कर्मोंसे प्रभु देते रहते हैं। किन्तु ज्ञानभक्ति और मोक्ष किसीसे नहीं मिलते सो देनेके लिये ही श्रीकृष्ण भूतल पर प्रकट होते हैं। सर्वोद्धार प्रयत्नात्मा कृष्णः प्रादुर्व०। 'सर्वोद्धार' शब्द में सर्व शब्दका पेट बडा है। जडचेतन सब कुछ जगत् इस सर्व शब्दमें आजाता है। तीन प्रकारके जीव लोकमें है, असाधन, लोकव्यापृत, और दुष्टसाधन। सर्व शब्दके पेटमें यह सब आरहे हैं।

काम क्रोध लोभ मोह ये सब प्रभु-प्राप्तिके असाधन हैं किन्तु जिन्हों में ये साधन भी हों वे असाधन हैं। किं वा जिनको वेदशास्त्रोक्त साधनों के आचरणका अधिकार ही नहीं है उन्हें असाधन कहते हैं। तात्पर्य यह है जिन्होंने जन्म लेकर अपने उद्धारके कोई साधन न किये हों अथवा विरुद्ध साधन किये हों उन्हें भी मोक्ष देनेका प्रभुमें सामर्थ्य हैं। इस लिये आचार्यचरणने कहा कि 'सर्वोद्धार'०।

खाना पीना धन्धा करना और रात को पड़ रहना, बस इतना जो जानते हैं वे लोग व्यापृत कहे जाते हैं। उनका भी प्रभु उद्धार करते है।

पाप करनेवाले दुष्टसाधन हैं। प्रभु उनकाभी उद्धार करते हैं अत एव प्रभुने आज्ञा की है कि-

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियोवैश्यास्तथाशूद्रास्तेऽपि यान्ति परां गतिम् ॥

यहां पापयोनि शब्द से दुष्टसाधनवालों का ग्रहण है, वैश्य शब्द से लोकव्यापृत जीवों का ग्रहण है और स्त्री शूद्रोंसे असाधनलोगोंका ग्रहण है। अर्थात् चाहे दुष्टसाधन जीव हों, चाहे लोकव्यापृत जीव हों, चाहे असाधन जीव हों और चाहे सुसाधन जीव हों, जो मेरा अनन्य आश्रय लें तो हे अर्जुन मैं इन सबका उद्धार करता हूं। इस गीता के वचन से भी स्पष्ट है कि लोक के साधन की अपेक्षा रक्खे विना सबको मोक्ष देने के लिये ही श्रीकृष्ण का प्रादुर्भाव है। और ऐसी अवस्था में यह कहना पड़ेगा कि सर्वोद्धार का सामर्थ्य एक श्रीकृष्ण में ही है।

'मां हि पार्थ' इस श्लोक में 'वैश्य' शब्द उपलक्षक है। अर्थात् एक लोकव्यापृत ही नहीं अन्य ब्राह्मण क्षत्रियादि सुसाधनसंपन्न भी यदि मेरा आश्रय लें तो वे भी परमगति को प्राप्त होंगे।

द्वीतीयस्कन्ध के 'तस्मात् भारत सर्वात्मा' श्लोक की सुबोधिनी में आचार्यचरण आज्ञा करते हैं कि यद्यपि ये अनुग्रह-मार्ग स्त्री आदि असाधनों के लिये प्रकट किया है तथापि यदि त्रैवर्णिक साधनाचरण करने वाले भी इस मार्ग में आवे तो उनका भी उद्धार श्रीकृष्ण करते हैं।

वेदस्तुति में श्लोक है कि—

निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि य-
न्मुनय उपासते तदरयोऽपि ययुः स्मरणात्।
स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो
वयमपि च ते समाः समदृशोऽङ्घ्रिसरोजसुधाः॥

हे प्रभो! अपने प्राण मन और इन्द्रियों को वशमें रखकर दृढ योगाभ्यास करनेवाले मुनिलोग, वैरसे स्मरण करनेवाले शत्रुलोग, सुपुष्ट आपके भुजदण्डपर मोहित होनेवाली गोपिकाएँ और हम श्रुतिलोक भक्तजन ये चारों समान रीतिसे आपके चरणकमलकी सुधाका पान करते हैं। बड़ा आश्चर्य है।

यहां चार प्रकारके अधिकारी हैं। कठिन साधनाः, विरुद्ध साधनाः, असाधनाः, सुसाधनाः।

कठिन साधनों में मुनिलोग हैं। सर्वत्याग करके वनमें जा कर रात दिन आपमें ही मन लगाते हैं और तब कहीं आपके चरणसुधाकी प्राप्ति होती है।

किन्तु दूसरे विरुद्धसाधन आपके वैरी हिरण्याक्ष हिरण्यकशिपु आदि हैं। रात्रि दिन गाली देते हुए आपकी निन्दा करते भी आपकी चरणसुधाको पहुंच जाते हैं। तीसरी गोपिजन हैं उन्हें तो आपके पुष्टभुजदण्ड और वक्षःस्थल ही चाहिए। और किसी साधनकी अपेक्षा ही नहीं है तो भी आपके चरणसुधाका पान करती हैं। और चतुर्थ सुसाधन हम श्रुतियां हैं जो आपके गुण और लीलाओंका वर्णन करके सरलसाधनों द्वारा आपके चरणकी प्राप्ति करती हैं।

इन सब शास्त्रोंसे यह सिद्ध होता है कि श्रीकृष्णभगवान् अपने सर्वोद्धार सामर्थ्यको साथ लेकर प्रकट हुए हैं। इसलिये अपने स्वरूपसामर्थ्य से सर्व-साधारणका उद्धार करते है। इसलिये वैष्णवोंको एक श्रीकृष्णका दृढ आश्रय लेना उचित है।

इतना कहकर मैं अपने वक्तव्य को यहां ही सम्पूर्ण करता हूं।



केचिदाहुरजं जातं पुण्यश्लोकस्य कीर्तये।
यदोः प्रियस्यान्ववाये मलयस्येव चन्दनम् ॥

अपरे वसुदेवस्य देवक्यां याचितोऽभ्यगात्।
अजस्त्वमस्य क्षेमाय वधाय च सुरद्विषाम् ॥

भारावतारणायान्ये भुवो नाव इवोदधौ।
सीदन्त्या भूरिभारेण जातोह्यात्मभुवार्थितः॥

भवे ऽस्मिन्क्लिश्यमानानामविद्याकामकर्मभिः।
श्रवणस्मरणार्हाणि : करिष्यन्निति केचन॥



नह्यस्य कर्हिचिद्राजन्पुमान्वेद विधित्सितम्।
यज्जिज्ञासया युक्ता मुह्यन्ते कवयोऽपि हि॥

—श्रीमद्भागवतम्।



पूज्य श्री लक्ष्मण शास्त्रीजी कुटुम्बीजन समेत

क्रमशः—(१) श्री पं. राजेश्वर शास्त्री (पुत्र) (२) जामाता (३) श्रीरामजी (भ्राताके पुत्र) (४) पू. श्री माताजी
(५) पू. श्री लक्ष्मणशास्त्री (६) श्री त्र्यंकटेश शास्त्री (७) श्रीविश्वनाथ शास्त्री (भ्राताके पुत्र)

## पूजनीय पितृचरण शास्त्रीजी।

श्री. पण्डितराज श्री राजेश्वर शास्त्री द्रविड

परम पूजनीय पितृचरण शास्त्रीजी के अभावमें सनातन धर्मको ही भारतवर्षकी समुन्नतिका बीज समझनेवाले हम लोगोंको अपनी शक्तिपर वह अनुभव हो रहा है जोकि भगवान् श्री कृष्णचन्द्रजी के स्वर्गारोहण के बाद भिल्लोंसे सताये गए गाण्डीवधारी अर्जुनको हुआ था। अथवा यों भी कहें तो अत्युक्ति न होगी कि आत्माके निकल जानेपर इद्रियों की जैसी अवस्था होती है। भगवान् सूर्य्यके अभाव मे सांसारिक प्राणियोंको अपने २ आरब्ध कार्योंको आगे बढानेमें जैसी कठिनाइयां सहनी पडती हैं। गोवर्द्धन पहाडको उठानेके समय यदि भगवान् अपनी तरफसे उस पहाडको छोड देते तो उनको मदत देने के बहाने अपनी २ लाठियोंसे गोवर्द्धन पर्वतको ढकेलनेवाले गोपबालकोंकी जैसी अवस्था होजाती हो, उसी अवस्थाके अनुभव प्रायः आज हम लोगोंके सामने उपस्थित है। परन्तु भगवान् सूर्यके अपने त्रिलोकलोचनीभूत किरणोंके सहित अस्त हो जाने पर भी बचें खुचें किरणोंसे पूर्ण जो अग्नि उसको लेकर के जिस तरह काम चलाना ही पडता है। उसी तरह पूज्य चरण के जीवन चरित्र को आगे रखकर ही अब अपने उत्साह, धैर्य आदि गुणोंको पुनः पूर्ववत् अनुप्राणित करना और धर्म्मप्रचारस्वरूप अपने कर्तव्यको यथावत् संचालन करते हुवे मानवजीवन को कृतार्थ बनाना धर्मप्रिय पुरुषोंका एकमात्र सहारा रहगया है। आधुनिक अर्थप्रधान युगमें द्रव्यके विना विद्या, वा धर्मका प्रचार होना असम्भव मानकर अवश्य कर्तव्यसे पीछे पांव रखनेका साहस करनेवाले मित्रवर्गोंका यह भ्रम दूर कर विना द्रव्यकेभी धर्मकार्यका प्रचार केवल उत्साह की साधनता में निर्विघ्न चल सकता है। इस बातको सिद्ध कर दिखानेमें पूज्यचरण शास्त्रीजी का जीवन चरित्र ही परम प्रमाण बन सकता है। इसलिये पूज्यपाद पितृचरणोंने अपने जीवनकालमें कौन २ से आदर्श कार्योंको कर हम लोगोंके समक्ष शिक्षार्थ समर्पण किया उन बातोंको विषयसूचीके रूपमे अति संक्षेपतः उद्धृत करता हूं। और इस काम के लिये प्रवृत्त करनेवाले माननीय सज्जनोंको सानन्द समर्पण करताहूं। प्रातःस्मरणीय

शास्त्रिचरणके पूज्यपिता अर्थात् मदीय पूजनीय पितामहजी "श्री रामचन्द्र शास्त्री, घनपाठी" इस नामसे मख्यात थे, और मद्रासमदेशान्तर्गत कुम्भकोणंके निकटवर्ती त्रिसिनिल्लूर ग्राममें कुलपरम्परासे रहा करते थे। पूज्य पितामहजीका यह घराना वैदिकों का बहुत पुराना घराना होनेके लिये मख्यात था। श्री पूज्य पितामहचरणजी स्वतः एक मख्यात वैदिक और हरिभक्तिपरायण सुनें जाते हैं, आपका अधिकांश समय वेदपाठ और हरिभक्तिमेंही बीता करता था । इस सभी और वंशानुगत धार्मिक वृत्तिकी मेरणासे भी आपके हृदयमे एकवार काशीवासकरनेकी उत्कट इच्छा उत्पन्न हो उठी, और वह इच्छा ऐसी अमोघ हो गई, कि जिसके मभावसे पूज्य पितामहचरण वहांसे अपना सर्वस्व त्याग कर परम पवित्र काशीक्षेत्रमें आही पहुंचे, काशीमें आकर आपनें काशीजीका वह दिव्य आन्तरिक दर्शन कर पाया कि जिसने आपको "अयाचितवृत्ति" पूर्वक जीवन यापनकर श्रीविश्वनाथजी तथा जगन्माता अन्नपूर्णाजीकी सेवा करते रहनेंको मेरित किया। तदनुसार आपने अपनें पासका सर्वस्व बांट दिया और स्वतः अयाचितवृत्तिको धारणकर श्रीहरिजीके भजनभक्तिमे अपना जीवन व्यतीत करनें लगे, इस अवस्था चार २ पांच २ दिन निराहार विताना पडता। परन्तु पासकातो सर्वस्व बांट ही दीया था, और किसीसे तो याचना करनीं हीं नथी, केवल भगवान्नामका अनुष्ठानही उन्हें उदसीनवृत्तिमें वह आह्लाद पहुंचाता, जिस आह्लादके लिये विशाल स्वर्णमहलमें रहनेंवाले नरेशोंकोभी ईर्ष्या रहाकरती है। पूज्यपितामहजीके इस चरित्रसे अन्दाज लगता है कि जिस द्रव्यलालसाने जगत्के समस्त लोगोंपर अपना मभाव जमा रखा है, उसकी विजयपताकाभी आपके सन्तोषके सामने गिर पडी थी।

श्रीपूज्यपितृचरणका अवतरणकाल—इस मकार सुनिवृत्तिधारणकर निःस्पृहतासे भगवद्भक्तिमें दिन विताते हुये पितामह और पितामहीको सम्वत् १९३१ चैत्र शुक्ल १२ में भगवान् विश्वनाथजीकी कृपासे पुत्रोत्पत्तिका आनन्द माप्त हुआ था। परमपूज्यपितृचरणका अवतरण समय यही था।

पूजनीय पितृचरणको गर्भमें आनाथा कि एक बङ्गाली सज्जनकी उदारतासे अन्नकी कुछ सहाय माप्त होनें लगीथी—अब पितृचरण ज्यों २ बढते गए मातापिताके लिये हार्दिक उल्लास भी वैसेही बढने लगा। जैसा कि धर्माङ्कुरकी वृद्धिसे माणियोंको आनन्द माप्त होता है। बाल्यावस्यासेही अपनें पूज्यपितृचरणोंके समीप विद्याभ्यास करते २ समस्त कृष्ण यजुर्वेदका अध्ययन थोडे दिनोंमें पितृचरणोंका हो गया। तदन्तर ऋग्वेदका भी

